आरण्यसंहिता

श्रीमत् सायणाचार्य्यकृतभाष्यसंहिता।

# ARANYASANHITA

OF

## SAMAVEDA,

WITH THE COMMENTARY

OF

## SAYANACHARYA.

EDITED AND PUBLISHED

BY

*PANDIT JIBANANDA VIDYASAGARA, B. A.*

*Superintendent Free Sanskrit College, Calcutta.*

SECOND EDITION.

CALCUTTA,

PRINTED AT THE SARASWATI PRESS.

1891.

To be had from Pandit Jibananda Vidyasagara, B. A.
Superintendent Free Sanskrit College, Calcutta.

# एतानि मुद्रितसंस्कृतपुस्तकानि।

| | |
|---|---|
| १ शीघ्रबोधव्याकरणम् ॥ २ | ३२ हितोपदेश सटीक ॥० |
| २ धातुरूपादर्शः १॥० | ३३ भाषापरिच्छेदमुक्तावलीदिनकरी १॥० |
| ३ शब्दस्तोममहानिधिः ८ | ३४ बहुविवाहवाद ।० |
| ४ सिद्धान्तकौमुदी सरलासहिता १० | ३५ दशकुमारचरितगद्यकाव्य सटीक १ |
| ५ सिद्धान्तबिन्दुसारः (वेदान्त) ॥० | ३६ परिभाषेन्दुशेखर ॥० |
| ६ तुलादानादिपद्धतिः (वङ्गाक्षरैः) ४ | ३७ कविकल्पद्रुम (धातुपाठः) ।० |
| ७ गयाश्राद्धादिपद्धतिः १ | ३८ चक्रदत्त (वैद्यक) १॥० |
| ८ शब्दार्थरत्नम् ॥ | ३९ उणादिसूत्र सटीक २ |
| ९ वाक्यमञ्जरी (वङ्गाक्षरैः) ।० | ४० मेदिनीकोष १ |
| १० सटीक छन्दोमञ्जरी वृत्तरत्नाकर ॥० | ४१ पञ्चतन्त्रम् विष्णुशर्म्मकृत सटीक १ |
| ११ वेणीसंहारनाटक सटीक ॥० | ४२ विद्वन्मोदतरङ्गिणी (चम्पूकाव्य) ॥० |
| १२ मुद्राराक्षसनाटक सटीक १ | ४३ माधवचम्पूकाव्य ।० |
| १३ रत्नावलीनाटिका सटीक ॥० | ४४ तर्कसंग्रह इं अनुवादसहित ॥० |
| १४ मालविकाग्निमित्रनाटक सटीक १ | ४५ प्रसन्नराघवनाटक जयदेवकृत १ |
| १५ धनञ्जयविजयनाटक सटीक ।० | ४६ विवेकचूडामणि वेदान्त ।/ |
| १६ महावीरचरितनाटक सटीक १॥० | ४७ काव्यसंग्रह मूलमात्र ५ |
| १७ महावीरचरितनाटक मूलमात्र ॥० | ४८ काव्यसंग्रह सटीक (संपूर्ण) ७ |
| १८ वैयाकरणभूषणसार ॥० | ४९ ऋतुसंहार काव्य सटीक ।/ |
| १९ लीलावती भास्कराचार्य्यरचित ॥० | ५० विक्रमोर्वशी नाटक (सटीक) १ |
| २० बीजगणित भास्कराचार्य्यरचित ॥० | ५१ वसन्ततिलक भाणनाटक ।/ |
| २१ शिशुपालबधकाव्य सटीक (माघ २ | ५२ गायत्री व्याख्या ॥० |
| २२ किरातार्जुनीयकाव्य सटीक १॥० | ५३ साङ्ख्यदर्शन (भाष्यसहित) २ |
| २३ कुमारसम्भवकाव्यपूर्वखण्ड सटीक॥० | ५४ भोजप्रबन्ध ॥० |
| २४ कुमारसम्भवकाव्य उत्तरखण्डसटीक॥ | ५५ नलोदय काव्य सटीक ॥/ |
| २५ अष्टकम् पाणिनीयम् ॥० | ५६ ईश केन कठ प्रश्न मुण्ड माण्डूक्य उपनिषद् (सटीक सभाष्य) ५ |
| २६ वाचस्पत्यम् (बृहदभिधान) १०० | ५७ छान्दोग्य उपनिषद् सटीक सभाष्य ५ |
| २७ कादम्बरीविस्तृतव्याख्यासहिता ३ | ५८ तैत्तिरीय ऐतरेय श्वेताश्वतर (उपनिषद्) सभाष्य सटीक २ |
| २८ राजप्रशस्ति सटीक / | ५९ बृहदारण्यक सटीक सभाष्य १० |
| २९ अनुमानचिन्तामणि तथा अनुमानदीधिति न्यायशास्त्र ४॥ | ६० सुश्रुतसंहिता सटीक (वैद्यक) १० |
| ३० सर्वदर्शनसंग्रहः दर्शनशास्त्र १ | ६१ शार्ङ्गधरसंहिता (वैद्यक) १ |
| ३१ भामिनीविलासकाव्य सटीक ॥० | |

# सामवेदस्य

# आरण्यसंहिता।

श्रीमत् सायणाचार्य्यकृतभाष्यसहिता।

पण्डितकुलपतिना
बि, ए, उपाधिधारिणा
श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण
संस्कृता प्रकाशिता च।

द्वितीयसंस्करणम्।

कलिकातानगर्य्यां
सरस्वतीयन्त्रे
मुद्रिता।

ई १८९१।

# आरण्य-संहिता।

ओं नमः सामवेदाय।

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम्॥ १॥
यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्॥ २॥
कृपालुः सायणाचार्य्यो वेदार्थं वक्तुमुद्यतः।
आरण्यकाभिधः षष्ठोऽध्यायो(क) व्याक्रियतेऽधुना॥ ३॥
तत्रेन्द्रेत्यादिकानान्तु पञ्चपञ्चाशतां क्रमात्।
ऋषिच्छन्दोदैवतञ्च तत्र तत्राभिदध्महे॥ ४॥
तत्राद्याया ऋचो द्रष्टा भरद्वाजः प्रकीर्त्तितः।
द्वितीयस्य वसिष्ठः स्यात्, तृतीयाया ऋचः स्मृतः॥ ५॥
वामदेवस्ततश्छन्दो बृहतीत्रिष्टुबेव च।
गायत्रीति क्रमादिन्द्रो भवेत् तिसृषु देवता॥ ६॥

---

(क) त्रय आर्चिक-ग्रन्था इति विवरणादि-सकल-ग्रन्थ-सम्मता वैदिक-प्रवादानुगताः पुस्तकाद्यन्त-समीक्षणेनोपलब्धव्याश्च। तथाच षडध्यायकश्छन्दो नाम एकः, अपरो नवाध्यायात्मक उत्तरः, ताभ्यामन्यत् एषोऽध्यायैकात्मक आरण्य इति व्यवहृतः। सायण-मते तु नैवम्। अयं हि पञ्चोपविभागैरेव छन्दोग्रन्थं परिसमाप्य तस्यैव षष्ठोपभाग एष इति मन्यते।

प्रथम-खण्डे—

सैषा प्रथमा।

भरद्वाजऋषिः, बृहतीच्छन्दः, इन्द्रोदेवता।

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २

ओम्। इन्द्रज्येष्ठन्नआभरओजिष्ठम्पुपुरिश्रवः।

१र २र ३ १ २ ३ १ ३ २र

यद्दिधृक्षेमवज्रहस्त (१) रोदसीउभेसुशिप्रपप्राः ॥ १ ॥

हे 'इन्द्र'! (ख) 'ज्येष्ठं' प्रशस्यतमम् 'ओजिष्ठम्' अतिशयेन बलकरम् 'पुपुरि' पूरकं 'श्रवः' अन्नं 'नः' अस्मभ्यम् 'आभर' आहर प्रयच्छ। हे 'वज्रहस्त'! वज्रबाहो! हे 'सुशिप्र'! शोभनहनुक! एवम्भूत! हे इन्द्र! 'यत्' अन्नं 'दिधृक्षेम' धारयितुमिच्छेम, यच्चान्नम् इमे परिदृश्यमाने 'उभे रोदसी' द्यावापृथिव्यौ 'आ पप्राः' आ पूरयसि, तदन्नमाहरेत्यन्वयः॥१॥

अथ द्वितीया।

वसिष्ठऋषिः, त्रिष्टुप्छन्दः, इन्द्रोदेवता।

२ ३ २ ३ १ २ ३ १र २र ३ २ ३ १ २ ३

इन्द्रोराजाजगतश्चर्षणीनामधिक्षमाविश्वरूपं-

१ २ १ २ ३ २ ३ १ २ ३ २ ३ ३ १ २

यदस्य। ततोददातिदाशुषेवसूनिचोदद्राधउप-

---

(१) "येनेमेचित्वज्रहस्त"—इति बह्वृचां पाठः।

(ख) "इन्दतेरैश्वर्य्य-कर्मणः"-इति नैरुक्तम् २का० १०अ० ८ख० ऐश्वर्य्यार्थमिति तद्भाष्यम्।

२ २
**स्तुतं चिदर्वाक् ॥ २ ॥**

यः 'इन्द्रः' 'जगतो' जङ्गमस्य पश्वादेः यतो 'राजा' ईश्वरो भवति चर्षणीनां मनुष्याणां च राजा भवति। किञ्च। अधिक्षमा ( सप्तम्येकवचनस्य लुक् ) क्षमायां (ग) 'विश्वरूपं' 'यत्' धनमस्ति तस्यापि राजा भवति। 'ततो ददाति दाशुषेवसूनि' यजमानाय वसूनि धनानि ददाति। स इन्द्रोऽस्माभिः उपस्तुतं सम्यक् स्तुतं 'राधः' धनं 'अर्वाग्' अस्मदभिमुखं 'चोदत्' प्रेरयतु ॥ २ ॥

अथ तृतीया।

वामदेवऋषिः, गायत्रीच्छन्दः, इन्द्रोदेवता।

३ २ ३ २ ३ १ २ ३ २उ ३ २ क २र
**यस्येदमारजोयुजस्तुजेजनेवनꣳस्वः**

१ २ ३ १ २ ३ २
**इन्द्रस्यरन्त्यंबृहत् ॥ ३ ॥**

'रजोयुजः' ज्योतिभिर्युक्तस्य (ज्योतीरज उच्यत इति यास्कः) अत्यन्ततेजस्विनो 'यस्य' इन्द्रस्य 'इदं' पुरोवर्ति स्तोत्रयुक्तं हविरस्ति तद्धविः 'स्वः' स्वर्गे सर्वत्र वा 'तुजे' दातरि जने यजमानविषये 'वनं' यतो वननीयं सम्भजनीयं खलु।

---

(२) "अधिक्षमा"-"अधिक्षमि"-इति, "विश्वरूपं"-"विषुरूपम्"-इति, "उपस्तुतम्"-"उपस्तुतः"-इति च साम्न ऋचः पाठभेदः।

(ग) निघण्टौ पृथिवीनामसु क्षमा इति षष्ठम् पदम्।

अतः 'इन्द्रस्य' दानं 'रत्यम्' अत्यन्तरमणीयं 'वृहत्' प्रभूतं भवति ॥ ३ ॥

अथ चतुर्थी।

शुनःशेपऋषिः, चतुष्पाज्जगतीच्छन्दः, वरुणो देवता।

१ २ ३ १ २ ३ १ २ ३ १र २र ३ १र २र ३ १ २
उदुत्तमंवरुणपाशमस्मदवाधमंविमध्यमꣳश्रथाय।
१ २ ३ २ ३ १र २र ३ २ ३ १ २
अथादित्यव्रतेवयन्तवानागसोअदितयेस्याम ॥४॥

आद्ये ऋचौ चतुष्पादे ह्येकपादयुतान्तिमा।
शौनःशेपी गार्त्समदी वामदेवीति ताः क्रमात्।
वारुणी पावमानी च वैश्वदेवीति संस्मृताः ॥

हे 'वरुण'! (घ) 'उत्तमम्' उत्कृष्टं शिरसि बद्धं 'पाशम्' 'उच्छ्रथाय' उत्कृष्टं शिथिलं कुरु। 'अधमं' निकृष्टं पादेऽवस्थितं पाशं 'अवश्रथाय' अव अधस्तात् शिथिलीकुरु। 'मध्यमं' नाभिदेशगतं पाशं 'विश्रथाय' वियुज्य शिथिलीकुरु। 'अथ' अनन्तरं हे 'आदित्य' अदितेः पुत्र! (ङ) वरुण!

---

(४) "अथादित्यव्रतेवयन्तव"-"अथावयमादित्यव्रतेतव"—इति साम्न ऋचः पाठभेदः ॥

(घ) "दक्षस्य वादिते जन्मनि व्रते राजाना मित्रावरुणा विवासि। अतूर्त्तपन्थाः पुरुरथो अर्यमा सप्तहोता विषुरूपेषु जन्मसु ऋक् १०म० ६, ४, ४"-इति मन्त्रलिङ्गात्—"अहोरात्रं मित्रावरुणौ २का० ११ख० २२ख०"-नैरुक्त-भाष्याच्च मित्रशब्देन दिवा, वरुणशब्देन च रात्रिः सुपष्टः। "वरुणः वृणोतीति सतः २का० १०अ० ३ख०"-इति व्युत्पादनात् सर्वेषां बटपटादीनां तमोरूपेण आवरकस्य।

(ङ) "अदितिरदीना*-* 'अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता

'वयं' शुनःशेपाः 'तव' व्रते त्वदीये कर्मणि 'अदितये' खण्डन-राहित्याय 'अनागसः' अपराध-रहिताः 'स्याम' भवेम ॥ ४ ॥

अथ पञ्चमी।

गृत्समदऋषिः, चतुष्पाज्जगतीच्छन्दः, पवमानोदेवता।

१ २ ३ १र २र　　३ १ २ ३ १र २र　　३ १ २

**त्वयावयंपवमानेनसोमभरेकृतंविचिनुयामशश्वत्।**

१ २ ३ १ २　　३ १ २ ३ १ २ ३ २

**तन्नोमित्रोवरुणोमामहन्तामदितिःसिन्धुःपृथिवी-**

३ २

**उत द्यौः ॥ ५ ॥**

हे 'सोम'! (च) पवमानेन पवित्रेण पूयमानेन 'त्वया' सहायेन 'भरे' (सङ्ग्राम-नाम) सङ्ग्रामे शश्वद् बहु 'कृतं' कर्त्तव्यं 'वयं' 'विचिनुयाम' विशेषेण कुर्य्याम। यस्मात्तव साहाय्येन कर्म्माणि कुर्मः 'तत्' तस्मात् अस्मान् 'मित्रो वरुणः अदितिः' एतन्नामिकाः, 'सिन्धुः' (छ) एतदभिधाना, तथा 'पृथिवी', 'उत' 'अपिच 'द्यौ'। एते मित्रादयः 'नः' अस्मान् 'मामहन्ताम्' पूजयन्तु धनादि-दानेन ॥ ५ ॥

---

स पिता स पुत्रः। विश्वेदेवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वम्''-इत्यदितेर्विभूतिमाचष्ट एनान्यदीनानीति वा''—इति नैरुक्तम् २का० ४अ० २२ ३ख०। दितिः खण्डनं तदभावोऽदितिरिति निष्पन्नोऽर्थो भाष्यादिलब्धः।

(च) सोमः सुनीतेः''-इत्यादि नैरुक्तम् ३का० ११अ० २ख०। तथाच सोमः सविता स्रष्टेत्यर्थः।

(छ) सिन्धुः समुद्रः, समुद्र इति अन्तरिक्षनामसु पञ्चदशम् पदम् नि० १, २।

अथ षष्ठी ।

वामदेव ऋषिः, एकपाज्जगतीच्छन्दः, विश्वेदेवा देवताः ।

२ १र २र ३ २ उ३ २

इमंवृषणंकृणुतैकमिन्माम् ॥ ६ ॥

पूर्वस्या ऋचि प्रकृता हे मित्रादयो देवाः ! यूयम् 'एकम्' अद्वितीयं दानकर्मणि 'इमं' सोमं 'वृषणं' कामानामभिवर्षकं 'कृणुत' कुरुत । तथा 'इमां' क्रियां फलाभिवर्षिकां कुरुत ॥६॥

अथ सप्तमी ।

अमहीयु ऋषिः, गायत्रीच्छन्दः, पवमानो देवता ।

३ २२ ३१ २ ३१२ २१

सनइन्द्राययज्यवेवरुणायमरुद्भ्यः ।

२ १र २र

वरिवोवित्परिस्रव ॥ ७ ॥

गायत्र्यौ पावमान्यौ तु सनइत्यादिके ऋचौ ।
अमहीयुस्तयोरेवं छन्दोदैवत-निर्णयः ॥ १ ॥

हे सोम ! (ज) 'सः' 'वरिवोवित्' धनस्य-लम्भकस्त्वं 'नः' अस्माकं 'यज्यवे' यष्टव्यायेन्द्राय (झ) 'वरुणाय' (ञ)

---

(ज) 'अथैषा परा भवति चन्द्रमसो वैतस्य वा''-२काः ११अ० ४ख० ।

(झ) 'इरां ददातीति वेरां दधातीति वा'-इत्यादि नैरुक्तम् २का० १०अ० ८ख० । इराशब्देन जलं प्रसिद्धम्, जलयोनित्वञ्चान्तरिक्षस्याग्नेरितीन्द्रपदेनाग्निरपि गृह्यते ।

(ञ) 'वरुणः कबन्धं प्र-ससर्ज'-इत्यादि-मन्त्रलिङ्गात् वरुणो मेघवर्षण-हेतुभूतः, स च आकृष्टवारिसमूहः प्रसिद्धः ।

'मरुद्भ्यः' (ट) च 'परिस्रव' धारया चर ॥ ७ ॥

अथाष्टमी ।

अमहीयुरृषिः, गायत्रीच्छन्दः, पवमानोदेवता ।

२ १र　२र ३ २उ　३　२　३　१　२
एनाविश्वान्यर्य्यआद्युम्नानिमानुषाणाम् ।
　　१　२
सिषासन्तोवनामहे ॥ ८ ॥

'एना' एनेनान्नेन सोमेन 'मानुषाणां' मनुष्याणां 'विश्वानि' 'द्युम्नानि' अन्नानि 'अर्य्यः' अभिगच्छन्तः 'सिषासन्तः' सम्भोक्तुमिच्छन्तश्च वयं 'वनामहे' भजामहे ॥८॥

अथ नवमी ।

त्रिष्टुभा अन्नदेवता आत्मानमेवाह—आत्मा एव ऋषिः ।

३ १ २　　　३ २　३　२　३
अहमस्मिप्रथमजाऋतस्य-
१ २ ३ १ २　३ १ २ ३　१ २
पूर्वंदेवेभ्योअमृतस्यनाम ।
३　१　२ ३ २उ　३ १ २　३
योमाददातिसइदेवमावद-
२उ　२ ३　१ ३ १　२
हमन्नमन्नमदन्तमद्मि ॥ ९ ॥

'देवेभ्यः' पूर्वं अग्नि-वरुणादि-देवेभ्यः-पुरा 'अहम्' अन्न-

---

(ट) 'मरुतो मितराविणो वा, मितरोचिनो वा, महद् द्रवन्तीति वा इति नैरुक्तम् ३का० ११अ० १३ख० । 'वायुर्वै क्षेपिष्ठा देवता'-इति च श्रूयते । ततो मरुतो वायव इति सिद्धान्तः ।

देवता 'अमृतस्य' विनाश-रहितस्य 'ऋतस्य' सत्यस्य परब्रह्मणः सम्बन्धिनी 'प्रथमजा अस्मि नाम' प्रथमत एवोत्पन्ना भवामि खलु। 'यः' पुमान् 'मां ददाति' अन्नरूपां माम् अतिथ्यादिभ्यो ददाति 'स इत्' स एव 'एवं' परिदृश्यमान-प्रकारेण 'आवत्' अवति सर्वान् प्राणिनो रक्षति। यस्तु लोभ-युक्तः-सन् प्राणिभ्योऽन्नमदत्वा स्वयमेव तदन्नमत्ति। 'अन्नम् अदन्तं' नानाविधान्नभक्षकं तं लोभिनम् 'अहमन्नम्' अन्न-देवता 'अद्मि' भक्षयामि विनाशयामीत्यर्थः ॥ ९ ॥

## इति प्रथमः खण्डः।

—:o◯o:—

## अथ—द्वितीयखण्डे—

सैषा प्रथमा।

श्रुतकक्ष ऋषिः, इन्द्रोदेवता, गायत्रीच्छन्दः।

२ ३ १ ३ २ ३ १ २
त्वमेतदधारयकृष्णासुरोहिणीषुच।

१ २ ३ २ ३ १ २
परुष्णीषु*रुशत्पयः ॥ १० ॥

अस्य सामर्थ्यमेवोपपादयति। हे इन्द्र! 'कृष्णासु' कृष्णवर्णासु गोषु। 'तथा रोहिणीषु च' [ "वर्णादनुदात्तान्तोपधात्तोन इति ङीप् ) रोहितवर्णासु [ 'परुष्णीषु' परुष्णी पर्ववतीति यास्कः ] पर्वशः पर्वशो नानावर्णासु च गोषु 'रुशत्' [ रोचतेर्दीप्ति-कर्मणः ] दीप्यमानं श्वेतम् 'एतत्' परिदृश्य-

* "पुरुष्णीषु" इति ऋग्वेदीयः पाठः।

मानं 'पयः' क्षीरं त्वम् 'अधारयः' धारयसि। तस्मात्-तद्बलं पूजयाम इति समन्वयः ॥ १० ॥

अथ द्वितीया।

पवित्रऋषिः, जगतीच्छन्दः, पवमानो देवता।
अरूरुचदिति त्वेतां पवित्रो दृष्टवानृषिः।
पवमानो देवता स्याच्छन्दश्च जगती स्मृता ॥

१ २   ३ २ ३ १ २   ३   २ ३ १ ३   २ १
**अरूरुचदुषसः पृश्निरग्नियउक्षामिमेतिभु-**

२   ३ २   ३   १ २
**वनेषुवाजयुः। मायाविनोममिरेअस्य-**

३ १ २ ३ १ २   ३ २ ३ ७ ३ १ २
**माययानृचक्षसःपितरोगर्भमादधुः ॥ ११ ॥**

[ 'उषसः' सम्बन्धी 'पृश्निः' आदित्यः(ठ) [ पृश्निरादित्यो भवति, प्राश्नुत एनं वर्ण इति नैरुक्ताः ]। 'अग्नियः' अग्रः मुख्यः सोमः 'अरूरुचत्' रोचयति। स 'उक्षा' जलस्य सेक्ता पर्जन्यः सन् 'मिमेति' भृशं शब्दायते। 'भुवनेषु' भूतजातेषु 'वाजयुः' तेषामन्नमिच्छन्; 'मायाविनः' माया प्रज्ञा तद्वन्तो देवाः 'अस्य' सोमस्य 'मायया' प्रज्ञया 'ममिरे' निर्मितवन्तः [ सोमस्य एकैकांश-पानवशात् अग्न्यादयः स्व-स्व-व्यापारेण जगत् सृजन्तीत्यर्थः ]। तस्य 'अस्य' मायया 'नृचक्षसः' नृणां

---

(११) "मिमेति भुवनेषु"—"बिभर्ति भुवनानि—"इति साम्नऋचः पाठभेदः

(ठ) 'सह वारिणानुषाश्चादित्यश्च इति च नैरुक्तम् २का० ११अ० १० ख०।

द्रष्टारः 'पितरः' पालकाः देवाः अङ्गिरसः पितरो वा 'गर्भम्' 'आदधुः' धारयन्ति ओषधीषु॥

स चात्र सूर्य्यात्मा सोमः सूयते। सूर्य-रश्मग्रनुगमाधीन-वर्द्धनाच्च चन्द्रस्य॥

यद्वा अयमुषसः पृश्निः सविता अरूरुचत् रोचयति रोचते वा। सर्वं शिष्टं समानम्। तत्सम्बन्धिनो नृणां द्रष्टारः पितरो जगद्रचकाः रश्मयो गर्भमादधुर्वृष्ट्यर्थम्॥११॥

अथ तृतीया।

द्वयोर्मधूच्छन्दो वैश्वामित्रो द्रष्टा स्याद्गायत्रीच्छन्द इन्द्रो देवतेति।

२ ३ ३ उ ३ २ ३ १ २ ३ १ २ ३ १ २
इन्द्रइद्धर्य्योःसचासम्मिश्लआवचोयुजा।

१ २ ३ १ २ ३ १ २
इन्द्रोवज्रीहिरण्ययः॥ १२॥

'इन्द्रइत्' इन्द्र एव 'हर्य्योः' हरि-नामकयोरश्वयोः 'सचा' सह युगपत् 'आ सम्मिश्लः' सर्वतः सम्यङ्मिश्रयिता। कीदृशयोर्हर्य्योः? 'वचोयुजा' इन्द्रस्य वचनमात्रेण रथे युज्यमानयोः सुशिक्षितयोरित्यर्थः। अयम् 'इन्द्रः' 'वज्री' वज्र-युक्तः 'हिरण्ययः' हिरण्मयसर्वाभरणैरुपेत इत्यर्थः॥ १२॥

अथ चतुर्थी।

मधुच्छन्दःविश्वामित्रऋषिः, गायत्रीच्छन्दः, इन्द्रो देवता।

३ १ २ ३ १ २
इन्द्रवाजेषुनोवसहस्रप्रधनेषुच।

३ २ ३ १ २ ३ १ २
उग्रउग्राभिरूतिभिः॥ १३॥

हे इन्द्र! 'उग्रः' शत्रुभिरप्रधृष्यस्त्वम् 'उग्राभिः' अप्रधृ-

याभिः ऊतिभिः अस्मद्द्वेष्य-पर-पचाभिः 'वाजेषु' युद्धेषु 'नः' अस्मान् 'अव' रच। तथा 'सहस्रप्रधनेषु' च सहस्र-सङ्ख्याक-गजाश्वादि-लाभ-युक्तेषु महायुद्धेष्वपि रच ॥ १३ ॥

अथ पञ्चमी।

प्रथ ऋषिः, त्रिष्टुप्छन्दः, विश्वेदेवा देवताः।

१ २ ३ १ २ ३ १ २ ३ १ २र ३ १
प्रथश्चयस्यसप्रथश्चनामानुष्टुभस्यहवि-

२ ३ २ ३ १र ३ २ ३ १
षोहविर्यत्। धातुर्द्युतानात्सवितुश्चवि-

२ ३ १ र २र ३ १ २
ष्णोरथन्तरमाजभारावसिष्ठः ॥ १४ ॥

अपश्यत् प्रथ इत्येतां त्रिष्टुभं प्रथनामकः।
वैश्वदेवीं भवेदेवं छन्दोदैवत-निर्णयः ॥ १ ॥

'यस्य' वसिष्ठस्य 'प्रथ नाम' पुत्रः, यस्य भरद्वाजस्य 'सप्रथः' नाम पुत्रः—तयोर्मध्ये 'वसिष्ठः' मम पिता 'आनुष्टभस्य' अनुष्टुप्छन्दसा युक्तस्य 'हविषः' घर्माख्यस्य 'हविः' हविष्प्रापादकं 'रथन्तरं' साम तद्रथन्तरं 'धातुः' धातृसंज्ञाद्देवात् (ड)। 'द्युतानात्' द्योतमानात् 'सवितुश्च' (ढ) 'विष्णोश्च' (ण) 'आजभार' आजहार आहृतवान् (हृग्रहोर्भ इति भत्वम्।) रथशब्दोपपदात्तरतेः संज्ञायां भृतृवृजीति खच्। अरुर्दिषदजन्तस्येति मुमागमः ॥ १४ ॥

(ड) 'धाता-विधाता' सर्वस्य इति नैरुक्तम् ३का० ११अ० १०ख०।

(ढ) 'सविता सर्वस्य प्रसविता,—इति नैरुक्तम् २का० १०अ० ३१ख०।

(ण) 'विष्णुर्विशतेर्वा व्यश्नोतेर्वा'-इत्यादि नैरुक्तम् ३का० ११अ० १५ख०। एवञ्च विष्णुशब्देन सर्वव्यापी सर्वान्तर्यामीति सिद्धान्तः।

अथ षष्ठी॥

नियुत्वानिति गायत्री वायुं गृत्समदोऽब्रवीत्।

२ १ २ र ३ २ ३ २ १ २

नियुत्वान्वायवागह्ययꣳशुक्रोअयामि ते।

१ २ २ २ ३ २

गन्तासि*सुन्वतो गृहम्॥ १५॥

हे 'वायो!' (त) 'नियुत्वान्' नियुतो वाहनानि वायोः (नियुतो वायोरिति निघण्टुः) तैर्युक्तस्त्वं 'आगहि' आगच्छ। 'अयं' 'शुक्रः' दीप्यमानः सोमः 'ते' तुभ्यम् 'अयामि' (यामः कर्मणि लुङि रूपम्) नियतो गृहीत आसीत्। यतः 'सुन्वतः' सोमाभिषवं कुर्वतो यजमानस्य 'गृहं' 'गन्तासि' यातोऽसि॥ १५॥

अथ सप्तमी।

नृमेधपुरुमेधौ द्वावृषी ऐन्द्रा अनुष्टुभः।

१र २ र ३ १२ ३ १ २

यज्जायथा अपूर्व्यमघवन्वृत्रहत्याय।

१ २ ३ १ २ ३ १ २ २१ ३ १र २

तत्पृथिवीमप्रथयस्तदस्तभ्नाउतोदिवम्॥ १६॥

हे 'अपूर्व्य!' त्वत्तो व्यतिरिक्तेन पूर्वेण वर्जित! हे 'मघ-

---

* "गतासि" इति ऋग्वेदपाठः।

(त) 'वायुर्वातेर्वेत्तेर्वा स्याद् गति-कर्मणः'-इत्यादि नैरुक्तम् १०, १, २ ख०।

वन्!' मंहनीयतम! धनवन्निन्द्र! 'वृत्रहत्याय' (य) वृत्रासुरहननाय 'यद्' यदा त्वं 'जायथाः' उत्पन्नः प्रादुर्भूतोऽसि 'तत्' तदानीमेव 'पृथिवीं' प्रथमानाम् 'अप्रथयः' प्रसिद्धां दृढ़ामकरोः। 'उत' अपिच 'दिवं' द्यां द्युलोकं अन्तरिक्षेण 'अस्तभ्नाः' निरुद्धामकार्षीः (ईदृशं वीर्यं त्वदन्यस्य न भवतीत्यर्थं द्योतयितुम् अपूर्व्येति पदम्) ॥ १६ ॥

## इति द्वितीयः खण्डः।

---

## अथ तृतीयखण्डे—

सैषा प्रथमा।

वामदेवऋषिः प्रोक्तो मयीत्यस्याः प्रजापतिः।
देवतास्यास्ततश्छन्दोऽनुष्टुप् सद्य इतीरितम्॥

२ ३ २ ३ २ ३ १ र २र ३ २ ३ १र २र
मयिवर्चोअथोयशोथोयज्ञस्ययत्पयः।
३ २ ३ १ २ ३ १र १ २र
परमेष्ठीप्रजापतिर्दिविद्यामिवदृꣳहतु ॥१७॥

'परमेष्ठी' परमे लोके तिष्ठतीति परमेष्ठी प्रजापतिः (द) 'दिवि' द्योतमाने स्वर्गे 'द्यामिव' द्योतमानां कान्तिमिव।

---

(य) 'अथास्य कर्म—रसानुप्रदानं वृत्रवधो या च का च बलकृतिरिन्द्र कर्मैव तत्'-इति नैरुक्तम् २का० ७अ० १०ख०। 'वृत्रवधो मेघवधः'-इति तत्रत्यभाष्यम्।

(द) 'प्रजापतिः प्रजानां पाता पालयिता वा'-इत्यादि नैरुक्तम् १का० १० अ० ४२, ४३ ख०।

'मयि' अस्मदीये शरीरे 'वर्च:' तेजः ब्रह्माख्यं 'दृंहतु' वर्द्धयतु। 'अथो' अपिच 'यशश्च' 'दृंहतु'। 'अथो' किञ्च। 'यज्ञस्य' यागस्य सम्बन्धि अतएव स उत्तमं 'पयः' हविर्लक्षणमन्नं च दृंहतु॥ १७॥

अथ द्वितीया।

त्रिष्टुभः पावमान्याः स्यार्षिर्गौतमनामकः।

२ १२ ३ १ २ ३ २ ३ १र २१
सन्तेपयाꣳसिसमुयन्तुवाजाःसंवृष्ण्यान्यभि

३ १ २ ३ १ २ ३ १ २
मातिषाहः। आप्यायमानोअमृतायसोम

३ १र १ २र ३ १ २
दिविश्रवाꣳस्युत्तमानिधिष्व॥ १८॥

हे 'सोम!' 'अभिमातिसाहः' अभिमातीनां शत्रूणां हन्तुः 'ते' तव एवंभूतं त्वां 'पयांसि' अपणार्थानि क्षीराणि 'संयन्तु' सङ्गच्छन्ताम्। तथा 'वाजाः' हविर्लक्षणान्यन्नानि च त्वां सङ्गच्छन्तां 'वृष्ण्यानि' 'वीर्याणि च सङ्गच्छन्ताम्। हे सोम! त्वं 'अमृताय' आत्मनः अमृतत्वाय अमरत्वाय 'आ' समन्तात् वर्द्धमानः सन् 'दिवि' नभसि स्वर्गे 'उत्तमानि' उन्नततमानि उत्कृष्टानि 'श्रवांसि' अन्नानि अस्माभिः भोक्तव्यानि हविर्लक्षणानि 'धिष्व' धारय (ते क्रिया-ग्रहणं कर्त्तव्यमिति कर्मणः संप्रदानत्वात् चतुर्थ्यर्थे षष्ठी॥ १८॥

अथ तृतीया॥

(ऋष्यादिकम् पूर्ववत्)

३ १र १ २र ३ २ ३ २ ३१ २
त्वमिमाओषधीःसोमविश्वास्त्वमपोअज-

२ २　　１ २　　३ २ １ २ ३
नयस्त्वंगाः। त्वमातनो*रुर्वान्तरिक्षं
१र　२र ३　१र २१
त्वंज्योतिषावितमोववर्थ ॥ १९ ॥

हे 'सोम! 'त्वम्' 'इमाः' भूम्यां वर्त्तमानाः 'विश्वाः' सर्वाः 'ओषधीः' 'अजनयः' उत्पादितवानसि। तथा 'त्वम्' 'अपः' तासामोषधीनां कारणभूतानि वृष्ट्युदकानि अजनयः। तथा 'त्वं' 'गाः' सर्वान् पशून् उदपादयः। 'उरु' विस्तीर्णम् 'अन्तरिक्षं' 'त्वम्' 'आतनोः' विस्तारितवानसि। तस्मिन्नन्तरिक्षे यत् 'तमः' अस्मदृष्टि-निरोधकम् अन्धकारं यदपि 'त्वं' 'ज्योतिषा' आत्मीयेन प्रकाशेन 'वि ववर्थ' विशिष्टं कृतवानसि। (ववर्थ वृञ वरणे लिटस्थलि, "बभूथा-ततंथ-जगृम्भ-ववर्थेति" निपात्यते) ॥ १९ ॥

अथ चतुर्थी।

अग्निमीडे मधुच्छन्दा गायत्रेषाग्निसंस्तुतिः।

३ १ २　　३ १ २　　३ १ २ ३ २　　३ ३ २
अग्निमोडे*पुरोहितंयज्ञस्यदेवमृत्विजम्।
१ २　　३ १　　२
होतारं रत्नधातमम् ॥ २० ॥

'अग्नि'-नामकं 'देवम्' 'ईड़े' स्तौमि (ईडस्तुताविति धातुः, मन्त्रस्यास्य होत्रा प्रयुज्यमानत्वात् अहं होता स्तौमीति लभ्यते) कीदृशम् अग्निम्? 'यज्ञस्य पुरोहितं' यथा राज्ञः

---

* "आतनोः" "आतन्य"—इति साम्न ऋचः पाठौ।

* "मीले" इति ऋग्वेदपाठः।

पुरोहितः तदभीष्टं सम्पादयति तथाग्निरपि यज्ञस्यापेक्षितं होमं सम्पादयति। यद्वा यज्ञस्य सम्बन्धि पूर्वभागे आहवनीयरूपेणावस्थितम्। पुनः कीदृशम्? 'होतारमृत्विजम्' (देवानां यज्ञेषु होतृनामकऋत्विगग्निरेव। तथाच श्रूयते—"अग्निर्वै देवानां होतेति")। पुनरपि कीदृशम्? 'रत्नधातमम्' यागरूपाणां रत्नानाम् अतिशयेन धारयितारं पोषयितारम्॥

अत्राग्निशब्दस्य यास्को बहुधा निर्वचनं दर्शयति—"अथातोऽनुक्रमिष्यामोऽग्निः पृथिवीस्थानस्तं प्रथमं व्याख्यास्यामोऽग्निः कस्मादग्रणीर्भवति, अग्रं यज्ञेषु प्रणीयतेऽगं नयति सन्नममानोऽक्नोपनो भवतीति स्थौलाष्टीविर्न क्नोपयति न स्नेहयति त्रिभ्य आख्यातेभ्यो जायत इति शाकपूणिरितादक्ताद्दग्धाद्वा-नीतात् स खल्वेते रकारमादत्ते गकारमनक्तेर्वा दहतेर्वा नीः परस्तस्यैषा भवति (७,४,१") इति॥ २०॥

अथ पञ्चमी।

त्रिष्टुभावामदेवोऽस्तौदग्निं तेमन्वतेति च।

१२ २ २उ २ २ २ २ २ १
तेमन्वतप्रथमन्नामगोनांत्रिःसप्तप

२ २ १र २ र १ २ २ २ क २र
रमन्नामजानन्। ताजानतीरभ्यनूष

२२ २ १ २ २ १र २र २ १ २
तच्चाआविर्भुवन्नरुणीर्यशसागावः* ॥२१॥

---

*"ताजानतीरभ्यनूषतच्चा आविर्भुवन्नरुणीर्यशसागावः"—इति छन्दोगाः। "ते मन्वत प्रथमं नाम गोनां त्रिःसप्त परमं

हे 'अग्ने !' 'ते' स्तोत्रं कुर्वाणा अङ्गिरसः 'गोनां' गवां वाचां सम्बन्धि नाम स्तुति-साधकं शब्द-मात्रं 'प्रथमं' पूर्वम्, 'अमन्वत' अजानत। पश्चात्तस्या वाचः सम्बन्धीनि 'त्रिःसप्त' एकविंशतिसंख्याकानि 'परमं' परमाण्युत्कृष्टानि 'नाम' नामानि स्तुतिसाधकानि स्तोत्राणि (जातावेकवचनम्)। छन्दांसि वा, तानि च गायत्र्यादीनि जगत्यन्तानि सप्त, अतिजगत्यादीनि अतिधृत्यन्तानि सप्त, कृतिप्रभृतीन्युत्कृति-पर्य्यन्तानि सप्त) 'जानन्' अजानन् अलभतम् (एवंविधच्छन्दो-युक्तैर्मन्त्रैरग्निमस्तुवन्नित्यर्थः) 'ताः' वाचः 'जानतीः' सर्वं जानत्यः 'व्राः' (व्रियन्ति गच्छन्त्युषः कालं प्रापयन्ति ताः) 'अभ्यनूषत' अस्तुवन्। ततः सूर्य्यस्य 'यशसा' तेजसा सह 'अरुणीः' अरुणवर्णाः 'गावः' 'आविर्भुवन्' प्रादुरभूवन्। (यद्वा 'ते' अङ्गिरसः 'प्रथमं' पुरातनं 'नाम' एहि सुरभि-गुग्गुलु-गन्धिनीति धेनु-नामधेयम् 'अमन्वत' उच्चारयामासुः। पश्चात् स्व-भूतानि पाणिभिरपहृतानि त्रिःसप्त-रत्नान्यविन्दन्। तत उच्चारितं जानत्यः 'गावः' अभ्यनूषत' हम्भारव-लक्षणं शब्दमकुर्वत। तदानीमुषाः प्रादुरभूदिति ॥२१॥

अथ षष्ठी।

इतीयं त्रिष्टुबाग्नेयी दृष्टा गृत्समदेन सा॥

२ ३र ३र २ १ २ ३ २ ३ २

**समन्यायन्त्युपयन्त्यन्याः समानमूर्वं**

---

नाम जानन्। ता जानतीरभ्यनूषत व्रा आविर्भुवन् धेनोस्त्रिः परमाणि विन्दन्। तज्जानतीरभ्यनूषत व्रा आविर्भुव दरुणी-र्यशसा गोः"—इति बह्वृचाः।

क २र २ २ १ २

नद्यस्पृणन्ति। तमूशुचिꣳशुचयोदी

२ १ २ ३१र २र३ १२३१ २

दिवाꣳसमपान्नपातमुपयन्त्यापः* ॥ २२ ॥

'अन्याः' वर्षाणाम् 'आपः' 'संयन्ति' भूम्यां सङ्गच्छन्ते 'अन्याः' च 'पूर्वं' तत्रावस्थिताः 'उपयन्ति' उपगच्छन्ति। ताः सर्वा आपः 'समानं' सह 'नद्यः' नदी भूत्वा 'ऊर्वं' समुद्रमध्ये वर्त्तमानं वडवानलं 'पृणन्ति' प्रीणयन्ति (पृण प्रीणने तौदादिकः) 'तमु' तमेव 'अपान्नपातम्' 'शुचिं' निर्मलं 'दीदिवांसं' दीप्यमानं [दीदिवेति छान्दसो दीप्तिकर्मा लिटः क्वसुः। वस्वेकाजाद्घसामिति नियमादड़भावः। छन्दसीवेति वक्तव्यमिति वचनाद्दिवचनाभावः। एवंभूतं] 'शुचयः' शुद्धाः 'आपः' उपयन्ति' समीपे गच्छन्ति ॥

एष हि वैद्युताग्निरूपेण मेघे वर्त्तमानोऽस्मान् अजीजनदिति बुद्ध्या वडवानलरूपेण वर्त्तमानं तं पर्य्युपासत इत्यर्थः। यद्वा अन्या एकधनाख्या आपः संयन्ति। चात्वालोत्करयोर्मध्ये वसतीवरीभिः सङ्गच्छन्ते। अन्या वसतीवर्य्याख्या आपश्च उपर्यंति उपरि गच्छन्ति एकमत्यं प्राप्ता भवन्ति। एताश्च मिलित्वा यज्ञं साधयन्त्यः तत्साध्य-वृष्टि-द्वारा नद्यो भूत्वा ऊर्वं पृणन्तीत्यादि समानम्। एवं हि आपो वा अस्पर्द्धन्त वयं पूर्वं यज्ञं वक्ष्याम इत्यादिको बह्वृचब्राह्मणविनियोगाख्यानुगृह्यते ॥ २२ ॥

---

* "अपान्नपातमुपयन्त्यापः"—"परितस्थुरापः"-इति सामऋचः पाठ-भेदः ॥

अथ सप्तमी।

अस्तौदनुष्टुभा रात्रिं वामदेव ऋचानया॥

१र २र ३ १ २ ३ १र २र ३ १र २र

आप्रागाद्भद्रायुवतिरह्नःकेतूंत्समीर्त्संति।

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २

अभूद्भद्रानिवेशनीविश्वस्यजगतोरात्री ॥२३॥

'भद्रा' सूर्य्यप्रकाशसन्तापं निवारयन्ती सुखकरी 'युवतिः' तमसो मिश्रयित्री 'रात्रिः' 'आप्रागाद्' आभिमुख्येन प्रगच्छति। 'अह्नः' चन्द्रमसः 'केतून्' रश्मीन् 'समीर्त्संति' सम्यग् बन्धयितुमिच्छति च। अतएव 'भद्रा'कल्याणी रात्री 'विश्वस्य' सर्वस्य 'जगतः' 'निवेशनी' निवेशकारिणी 'अभूत्' भवति। (अहनि स्वस्वव्यापारात् खिन्नान् सर्वप्राणिनः स्वाश्रयेषु स्वापयतीत्यर्थः॥ २३॥

अथ अष्टमी।

वैश्वानरं जगत्यास्तौद्भरद्वाजो बार्हस्पत्यः॥

३ २ ३ १ २ ३ २ ३ २उ ३ २ ३ १ २

प्रक्षस्यवृष्णोअरुषस्यनूमहः प्रनोवचो

३ १ २ ३ १ २ ३ १ २ ३ १र

विदथाजातवेदसे। वैश्वानरायमतिर्न

२र ३ २ ३ १ २ ३ १ २ ३ १ २

व्यसेशुचिः सोमइवपवतेचारुरग्नये* ॥२४॥

---

* "प्रक्षस्य"—"पृक्षसा"-इति, "महः"-"सहः"-इति, "प्रनोवोचः"-"प्र नु वोचम्"-इति, "जातवेदसे"-"जातवेदसः"-इति, "नव्यसे" "नव्यसि"-इति च साम्नऋचः पाठ-भेदः॥

'प्रत्नस्य' संप्रत्नस्य व्याप्तस्य (यद्वा प्रत्नं हविर्लक्षणमन्नं तद्वतः) 'वृष्णः' सेक्तुः 'अरुषस्य' आरोचमानस्य 'वैश्वानराय' (ध) 'महः' पूजायुक्तं बलं तेजो वा 'नु' चिप्रं स्तौमि। अतएव 'नः' अस्मदीयं 'वचः' वचनं 'विदथे' यागे 'प्रयच्छति' स्तौतीत्यर्थः। 'जातवेदसे' जातप्रज्ञाय जातधनाय वा तमुद्दिश्येत्यर्थः। (उक्तमेव प्रकारान्तरेणादरादाह) 'नव्यसे' नवतराय 'वैश्वानराय' अग्नये 'शुचिः' निर्मला स्तोतॄणां शोधयित्री वा। 'चारुः' कल्याणी 'मतिः' मननीया स्तुतिश्च 'पवते' मत्सकाशात् प्रभवति स्वयमेव गच्छतीत्यर्थः। 'सोम इव' यथा सोमो दशापवित्रात् स्रवति तद्वदित्यर्थः॥ २४॥

अथ नवमी।

एषा त्रिष्टुप् वैश्वदेवी भरद्वाजेन वीक्षिता॥

१　२　३ १र　२र　　३ २　३ १र　२र　३ १र
विश्वे देवा मम शृण्वन्तु यज्ञो* मुभे रोदसी अपान्न

२र ३ १　२　　३　१ २　　३　१　२
पाच्चमन्म। मावोवचाᳲसिपरिचक्ष्याणि

३ २उ　　३　१ २
वोचᳲसुम्नेष्विद्वोअन्तमामदेम॥ २५॥

'विश्वे' सर्वे 'देवाः' 'मम' मदीयं 'मन्मः' मननीयं 'यज्ञं' यजनीयं पूजां हवींषि वा 'शृण्वन्तु' गृह्णन्त्वित्यर्थः। 'अपान्नपात्' मध्यस्थानोऽग्निश्च 'उभे रोदसी' द्यावा-पृथिव्यौ अस्मदीयं स्तोत्रं शृण्वन्तु चित्ते अवधारयन्तु।

---

* "यज्ञं"—"यज्ञियाः"-इति पाठो।

(ध) वैश्वानरः कस्माद् विश्वान् नरान् नयति इत्यादि नैरुक्तम् ७,२१।

अथ प्रत्यक्ष-कृता:।—हे 'देवा:'! 'व:' युष्माकं 'परिचक्ष्याणि' परिवर्जनीयानि यानि 'वचांसि' स्तोत्राणि 'मा वोचं' न ब्रवीमि। अपितु समीचीनानीति। अत:, वो युष्माकम् 'अन्तमा:' अन्तिकतमा: सन्तो वयं 'सुम्नेष्वित्' युष्माभिर्दत्तेषु सुखेष्वेव वर्त्तमाना: 'मदेम' मोदेम॥ २५॥

अथ दशमी।

वामदेवो महापङ्क्त्या स्तौति लिङ्गोक्तदेवता:॥

१ २ ३ १ २ ३ १र २र ३ २
यशोमाद्यावापृथिवीयशोमेन्द्रबृहस्पती।

३ १ २ ३ १ २ ३ १ २
यशोभगस्यविन्दतुयशोमाप्रतिमुच्यताम्।

३ २ २ ३ २ ३ १ २ ३ १ २
यशस्वा३:स्या:सꣳसदोऽहंप्रवदितास्याम्॥२६॥

'द्यावापृथिवी' द्यावापृथिव्यो: 'यश:' 'मा' स्तोतारम् 'आविन्दतु' लभतां प्राप्नोत्वित्यर्थ:। किञ्च, 'इन्द्रबृहस्पती" इन्द्राबृहस्पत्यो: 'यशो' 'मा' मां विन्दतु। किञ्च, 'भगस्य' आदित्यस्य 'यश:, मा' मां विन्दतु। बहुलेन यशसा यशो मया 'मा प्रतिमुच्यतां' न प्रमुच्यताम्। 'यशस्वस्या:' अस्या: मम 'संसद:' समूहस्य 'यश:' न प्रमुच्यताम्। 'अहं' प्रवदिता सर्वत्र प्रवक्ता 'स्याम्' भूयासम्॥ २६॥

अथ एकादशी॥

दृष्टा हिरण्यस्तूपेन त्रिष्टुबेषेन्द्रदेवता॥

१ २ ३ २ क २र ३ १ २ ३ १ २ ३ १ २
इन्द्रस्यनुवीर्याणिप्रवोचंयानिचकार

२ १ २ ३ २ ३ १ २ ३ १ २
प्रथमानिवज्री। अहन्नहिमन्वपस्त
३ २३ १ २ ३ १ २
स्तर्दप्रवक्षणाअभिनत्पर्वतानाम् ॥२७॥

'वज्री' वज्रयुक्त इन्द्रः 'प्रथमानि' पूर्वसिद्धानि मुख्यानि वा 'यानि' 'वीर्याणि' पराक्रमयुक्तानि 'कर्माणि' चकार। तस्य 'इन्द्रस्य' तानि वीर्याणि। 'नु' क्षिप्रं 'प्रवोचं' प्रब्रवीमि। कानि वीर्याणीति? तदुच्यते—'अहिं' मेघम् 'अहन्' हतवान्। तदेतदेकं वीर्यम्। 'अनु' पश्चाद् 'अपो' जलानि 'ततर्द' हिंसितवान् भूमौ पातितवानित्यर्थः। इदं द्वितीयं वीर्यम्। 'पर्वतानां' सम्बन्धिनीः 'वक्षणाः' प्रवहणशीला नदीः 'प्राभिनत्' कूलद्वयकर्षणेन प्रवाहितवानित्यर्थः। इदं तृतीयं वीर्यम् ॥ २७ ॥

अथ द्वादशी।

विश्वामित्रऋषिस्त्रिष्टुप्छन्दस्त्वग्निरिति द्वयोः।
उत्तराग्नेः स्तुतिः पूर्वा स्तुतिः सर्वात्मनात्मनः॥

३ १ २ ३ १ २ ३ १ २ ३ १र २र
अग्निरस्मिजन्मनाजातवेदाघृतंमेचक्षु
३ १ २ ३ ३ १ १ २ ३ १र २ २
रमृतंमआसन्। त्रिधातुरर्कोरजसो
३ १र २र ३ १ २ ३ १ २ ३ १ २
विमानोजस्रं*ज्योतिर्हविरस्मिसर्वं ॥२८॥

---

* "अजस्र"-"घर्मः"-इति साम्न ऋचः पाठ-भेदः॥

साचात्क्षत-परतत्त्व-स्वरूपोऽग्निः स्वात्मनः सर्वात्मनः सर्वात्मकत्वानुभवम् अस्यामृचि आविष्करोति—

हे कुशिकाः! भोक्तृ-भोग्य-भावेन द्विविधम् इदं सर्वं जगत्। "एतावद्वा इदमन्नं चैवान्नादश्च सोम एवान्नमग्नि-रन्नादः"-इति श्रुतेः। तत्र सकल-भोक्तृ-वर्ग-रूपेणान्नादोऽग्निः। स च अग्निवाय्वादित्य-भेदेन त्रेधा भूत्वा पृथिव्यन्तरिक्ष-द्युलोकानधितिष्ठति। तदुक्तं वाजसनेयके—"स त्रेधात्मानं व्यकुरुतादित्यं द्वितीयं वायुं तृतीयम्" इति।

तत्र सो 'ऽग्निः' अहं 'जन्मना' एव 'जातवेदाः' 'अस्मि' श्रवणमननादि-साधन-नैरपेक्ष्येण स्वभावतएव साक्षात्कृत-पर-तत्त्वस्वरूपोऽस्मि। 'घृतं मे चक्षुः' यदेतद्विश्वस्यावभासकं मम स्वभावभूतम्प्रकाशात्मकं चक्षुः तद् घृतन् इदानी मत्यन्त-दीप्तम्। यदेतद् अमृतं कर्मफलं दिव्यादि-विविध-विषयोपभोगात्मकं तन्मे मम आसन्नास्ये वर्त्तते। सकल-भोक्तृ-वर्गात्मना स्वयमेवावस्थानात्। (एवं स्वात्मनः पृथि-व्यधिष्ठातृ-रूपता-मभिधाय वाय्वात्मनान्तरिक्षाधिष्ठातृतामाह) अर्को जगतः स्रष्टा प्राणः। "सोर्चन्न" चरत्तस्यार्चत आपो जायन्तार्चतेव मिकमभूदिति तदेवार्कस्यार्कत्वमिति श्रुतेः। स प्राणः अहं त्रिधातुः त्रिधात्मानं विभज्य तत्र वाय्वात्मना 'रजसः' ऽन्तरिक्षस्य 'विमानः' विमाता अधिष्ठातास्मि। (तथा आदित्यरूपेण द्युलोकाधिष्ठातृतामाह—) 'अजस्रं ज्योतिः' अनुपक्षीणं नित्यं तेजः प्रकाशात्मा द्युलोकाधिष्ठाता आदि-त्योऽप्यह मस्मि। (एवं भोक्तृ-रूपता मात्मनोऽनुसन्धाय भो-ग्य-रूपता मप्यनुसन्धत्ते। यत् हविर्भोग्यं प्रसिद्ध मस्ति तत्सर्व-मप्यह मेवास्मि॥

यद्वा। अह 'मग्नि रस्मि देवानां' हविः-प्रापणात् अह

नादिगुण-युक्तोऽस्मि। किञ्च, 'जन्मना' उत्पत्त्या 'जातवेदाः' जातज्ञानोऽस्मि। उत्पत्ति-क्षण एव सर्वज्ञोऽह मस्मि। अथवा जातं सर्वं स्वात्मतया वेत्तीति जातवेदाः सर्वात्मक इत्यर्थः। तत् कथम्? इत्युच्यते—'घृतं' मे चक्षुः यदेतद् घृतं प्रसिद्ध-मस्ति तन्मे चक्षुः-स्थानीयम्, यथालोके चक्षुर्भासकम् एवं घृत-मपि प्रक्षिप्तं ज्वालामुत्पादयत मम भासकम्। 'अमृतं' प्रभारूपं। यदमृत मविनाशि ज्योतिः 'मे' मम 'आसन्' आस्ये वर्त्तते। 'त्रिधातुः' प्राणापानव्यानात्मकस्त्रिधा वर्त्त-मानोऽर्कोऽर्चनीयो यः प्राणोऽस्ति सोऽप्यह मेवास्मि। तथा 'रजसः' अन्तरिक्षस्य 'विमानः' विशेषेण माता परिच्छेत्ता वायुश्चाह मस्मि। किञ्च। 'अजस्रं ज्योतिः' नैरन्तर्य्येण तापकः सूर्य्यश्चाह मस्मि। किं बहुना। आज्य-पुरोडाशादि-रूपं यदे-तद्धवि रस्ति तदुपलक्षितं तत्सर्वं मप्यहमस्मि ('सर्वं खल्विदं ब्रह्मेति श्रुतेः) तमनेकधा अग्नेः सर्वात्मकत्व-प्रतिपादनेन पर-ब्रह्मत्व मुक्तं भवति॥ २८॥

अथ त्रयोदशी।

२ २ २ ३ १र २र ३ १र २र ३ १र
पात्यग्निर्विपोअग्रं*पदंवेःपातियह्व

२र ३ १ २ ३ १ २ ३ १ २
श्चरणंसूर्यस्य। पातिनाभासप्तशीर्षा-

२ १र २र ३ १ २ ३ १ २ ३ २
णमग्निःपातिदेवानामुपमादमृष्वः॥ २९॥

'अग्निः' 'वेः' गन्त्र्याः सर्वत्र व्याप्तायाः 'विपः' भूम्याः

---

* "पात्यग्निर्विपोअग्रं"-"पाति प्रियं रिपोअग्रम्"-इति पाठो।

'अग्रं' मुख्यं 'पदं' स्थानं 'पाति' रक्षति। 'यह्वः' महान् अग्निः 'सूर्यस्य' 'चरणं' चरत्यनेनेति चरणमन्तरिक्षं 'पाति'। 'नाभा' नाभौ अन्तरिक्षस्य मध्ये 'सप्त शीर्षाणं' सप्तगणं मरुद्रूपं 'पाति'। 'ऋष्वः' दर्शनीयोऽयम् 'अग्निः' 'देवानाम्' 'उपमादम्' उपमादकं यज्ञं 'पाति' रक्षति ॥ २९ ॥

## इति तृतीयः खण्डः।

---

## अथ—चतुर्थखण्डे—

सैषा प्रथमा।

वामदेवऋषिः पंक्तिर्भ्राजंत्यग्न इति द्वयोः।
आग्नेयी प्रथमर्त्तव्या द्वितीया दृश्यते तयोः ॥

१ २ ३ १ २ ३
भ्राजंत्यग्ने समिध्यानदीदिवोजिह्वाचरत्यं

२ ३ १ २ १र २र ३ १ २ ३ २ ३ १र
तरासनि। सत्वंनोअग्नेपयसावसुविद्रयिं

२र ३ १ २
वर्चोदृशेदाः ॥ ३० ॥

'समिधान' ऋत्विग्भिः समिध्यमान! दीप्त! हे 'अग्ने'! 'भ्राजन्ती' प्रकाशमाना 'आसनि' आस्ये 'अन्तर्' मध्ये स्थिता त्वदीया 'जिह्वा' हवींषि 'चरति' भक्षयति। हे 'अग्ने'! 'वसुवित्'! धनलम्भक! त्वं 'नः' अस्मभ्यं 'पयसा' अन्नेन सह 'रयिं' रमणीयं धनं 'दृशे' दर्शनाय 'वर्चः' तेजश्च तेजस्वित्वं वा 'अदाः' देहि ॥ ३० ॥

अथ द्वितीया।

२ १र २र ३ १र ३र ३ १र २र
वसंतइन्नुरंत्योग्रीष्मइन्नुरंत्यः। वर्षाण्यनु
३ १ २ ३ १र २र ३ १र २र
शरदोहेमंतःशिशिरइन्नुरंत्यः ॥ ३१ ॥

'वसन्तः इन्नु' वसन्त एव चैत्र-वैशाखरूपवसन्त ऋतुरेव 'रन्त्यः' रमणीयः भवति। 'ग्रीष्म इन्नु' ज्येष्ठाषाढ़रूपो ग्रीष्म-ऋतुरेव 'रन्त्यः' रमणीयः। 'वर्षाणि' वर्षाश्रावण-भाद्रपद-रूपेणावयवीभूवः प्रावृट् ऋतुरेव 'रन्त्यः' रमणीयः। 'तान्यनु' 'शरदः' आश्विनकार्त्तिकरूपेणावयवीभूतऋतुः 'रन्त्यः' रमणीयः। 'हेमन्तः' मार्गशीर्ष-पौषरूप एव 'रन्त्यः' रमणीयः। 'शिशिर इन्नु' माघ-फाल्गुनरूप एव 'रन्त्यः' रमणीयः ॥३१॥

अथ तृतीया।

३ १ २ ३ १ २ ३ २ ३ १र ३
सहस्रशीर्षाः पुरुषः सहस्राक्षः सहस्रपात्।
१र २र ३ १ २ ३ १ २ ३ २
सभूमिꣳसर्वतो (१) वृत्वात्यतिष्ठद्दशांगुलम् ॥३२॥

सर्व-प्राणि-समष्टि-रूपो ब्रह्माण्डदेहो विराड़ाख्यो यः पुरुषः सोऽयं 'सहस्रशीर्षाः' (सहस्र-शब्दस्योपलक्षणत्वात्) अनन्तैः शिरोभिर्युक्त इत्यर्थः। यानि सर्व-प्राणिनां शिरांसि तानि सर्वाणि तद्देहान्तःपातित्वात्तदीयान्येवेति सहस्र-शीर्ष-त्वम्। एवं सहस्राक्षत्वं सहस्रपादत्वं च। स पुरुषः 'भूमिं' ब्रह्माण्ड-गोलक-रूपां सर्वतः 'आ' समन्तात् 'वृत्वा' परिवेष्ट्य दशाङ्गुल-परिमितं देशम् 'अत्यतिष्ठत्' अतिक्रम्य व्यवस्थितः।

(१) "विश्वतो"-इति ऋ०।

(दशाङ्गुलमित्युपलक्षणं) ब्रह्माण्डाद्बहिरपि सर्वतो व्याप्यावस्थित इत्यर्थः ॥ ३२ ॥

अथ चतुर्थी ।

३ २ ३ २उ ३ १ २ ३ १ २ ३ १ २ ३ १ २
त्रिपादूर्ध्व उदैत्पुरुषःपादोऽस्येहाभवत्पुनः ।
३ १ क २र ३ २ ३ २
तथाविष्वङ्व्यक्रामदशनानशनेअभि(२) ॥३३॥

योऽयं 'त्रिपात् पुरुषः' संसार-स्पर्श-रहितः बहुल-स्वरूपः सोऽयम् 'ऊर्ध्वं उदैत्' अस्मादज्ञान-कार्य्यात्संसाराद्बहिर्भूतः सन् तत्रत्यैर्गुणदोषैरस्पृष्टः उत्कर्षेण स्थितवान् । 'अस्य' योऽयं 'पादः' लेशः सोऽयमिह मायायां पुनरभवत् । सृष्टि-संहाराभ्यां पुनः पुनरागच्छतीति (अस्य सर्वस्य जगतः परमात्मलेशत्वं भगवताप्युक्तं—"विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदिति") तथा मायायामागत्यानन्तरं 'विष्वङ्' देव-तिर्य्यगादि-रूपेण विविधः सन् 'व्यक्रामत्' व्याप्तवान् । किं कृत्वा ? 'अशनानशने' अभिलक्ष्य अशनं भोजनादि-व्यवहारोपेतं चेतनं प्राणि-जातम्, अनशनं तद्रहितमचेतनं गिरिनद्यादिकम् । तदुभयथा यथा स्यात्तथा अयमेव विविधो भूत्वा व्याप्तवानित्यर्थः ॥ ३३ ॥

अथ पञ्चमी ।

१ २ ३ २उ ३ २ ३ १उ ३ १ २
पुरुष(३)एवेदꣳसर्वं यद्भूतंयच्चभाव्यम्(४) ।

---

(२) "ततो विष्वङ् व्यक्रामत् साशनानशने अभि" ऋ०
(३) "पुरुएवेदं"—(४) "यच्च भव्यम्"—

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १

**पादोस्यसर्वाभूतानित्रिपादस्यामृतंदिवि(५) ॥३४॥**

यत् 'इदं' वर्त्तमानं जगत् तत् 'सर्वं' 'पुरुष एव'। 'यद्भूतम्' उत्पन्नं जगत् 'यच्च भाव्यं' भविष्यज्जगत् तदपि पुरुष एव। यथास्मिन् काले वर्त्तमानाः प्राणिनः सर्वेऽपि चराचरात्मकपुरुषस्यावयवाः तथैव गतागामिनोरपि कल्पयोर्द्रष्टव्यमित्यभिप्रायः। एतदेवोभयं स्पष्टीक्रियते—'अस्य' पुरुषस्य 'सर्वाणि भूतानि' काल-त्रय-वर्त्तीनि प्राणि-जातानि 'पादः' चतुर्थोऽंशः। 'अस्य' पुरुषस्यावशिष्टं 'त्रिपात्' स्वरूपम् 'अमृतं' 'विनाश-रहितं' सत् 'दिवि' द्योतनात्मके स्व-प्रकाश-स्वरूपे व्यवतिष्ठत इति शेषः। (यद्यपि "सत्यं ज्ञानमनन्तं ब्रह्म"-इत्यनन्तस्य परब्रह्मणो ह्यीयदन्तत्वाभावात् पादचतुष्टयं निरूपयितुमशक्यं, तथापि जगदिदं ब्रह्म-स्वरूपापेक्षया अल्पमिति विवक्षितत्वात् पादत्वोपचारः ॥ ३४ ॥

अथ षष्ठी।

१ २ ३ २उ ३ १ २ ३ १ २

**तावानस्य(६)महिमाततो(७)ज्यायाꣳश्चपूरुषः(८)**

२ १ २ ३ १र २र ३ १र २र ३ १ २

**उतामृतत्वस्येशानोयदन्नेनातिरोहति ॥३५॥**

अतीतानागतवर्त्तमान-रूप-जगदाद्याधारो योऽस्ति 'तावान्' सर्वोऽपि 'अस्य' पुरुषस्य 'महिमा' स्वकीय-सामर्थ्य-

---

(५) "उतामृतत्वेत्यादि" ऋ०।

(६) "एतावानस्य"—(७) "अतोज्यायांश्च"—

(८) "पादोऽस्येत्यादि" ऋ०

विशेषः। न तु तस्य वास्तवं स्वरूपम्। वास्तवस्तु 'पुरुषः' 'ततो' महिम्नोऽपि 'ज्यायान्' अतिशयेनाधिक इत्यर्थः। 'उत' अपिच 'अमृतत्वस्य' देवत्वस्य 'अयम् ईशानः' स्वमायया 'यत्' यस्मात् कारणात् 'अन्नेन' प्राणिनां भोग्येन अन्नेन निमित्त-भूतेन 'अतिरोहति' स्वकीयां कारणावस्थामतिक्रम्य परिदृश्यमान-जगदवस्थां प्राप्नोति। तस्मात् प्राणिनां कर्म-फल-भोगाय जगदवस्था-स्वीकारात् नेदं तस्य वस्तु-तत्त्वमित्यर्थः॥ ३५॥

अथ सप्तमी।

१ २   २ १ २   ३ २ ३ २ ३ १ २

ततो(९)विराडजायतविराजोअधिपूरुषः।

३ १र   २र   ३ २उ   ३ १ २ ३ २

सजातोअत्यरिच्यतपश्चाद्भूमिमथोपुरः॥३६॥

"विष्वङ् व्यक्रामत्"-इति यदुक्तं तदेवात्र प्रपञ्चयते-'ततः' तस्मादादि-पुरुषात् 'विराट्' ब्रह्माण्ड-देहः 'अजायत' उत्पन्नः। (विविधानि राजन्ते वस्तून्यत्रेति विराट्) 'विराजो अधि' विराड्देहस्योपरि तमेव देहमधिकरणं कृत्वा 'पूरुषः' तद्देहाभि-मानी कश्चित्पुमानजायत। योऽयं सर्व-वेदान्त-वेद्यः परमात्मा सएव स्वकीयया मायया विराड्देहं ब्रह्माण्ड-रूपं सृष्ट्वा तत्र जीव-रूपेण प्रविश्य ब्रह्माण्डाभिमानी देवतात्मा जीवोऽभवत् (एतच्चाथर्वणिक-उत्तरतापनीये विस्पष्टमामनन्ति—"स वा एष भूतानीन्द्रियाणि विराजं देवताः कोशांश्च सृष्ट्वा प्रविश्य मूढो मूढ इव व्यवहरन्नास्ते माययैवेति") 'स जातः' विराट् पूरुषः 'अत्यरिच्यत' अतिरिक्तोऽभूत्। विराड्-व्यतिरिक्तो देवतिर्यङ्मनुष्यादिरूपोऽभवत्। पश्चाद्देवादि-जीव-

(९) "तस्माद्" ऋ०।

भावादूर्ध्वं भूमिं ससर्जेति शेषः । 'अथो' भूमि-सृष्टेरनन्तरं तेषां जीवानां 'पुरः' ससर्ज [पूर्य्यन्ते सप्तभिर्धातुभिरिति पुरः] शरीराणि ॥ ३६ ॥

मन्ये वामिति पञ्चर्चो वामदेवेन वीक्षिताः ।
अत्राद्यैकान्तिमे च द्वे त्रिष्टुभस्तासु चादिमा ॥
उपरिष्टाज्ज्योतिरिति बह्व चैव विधीयते ।
अन्ये अनुष्टुभौ द्यावापृथिव्योः प्रथमा तथा ॥
द्वितीयैन्द्री चतुर्थी च तृतीयाशीर्निजात्मनः ।
स्तुतिर्गवामन्तिमेति छन्दोदैवत-निर्णयः ॥

अथ अष्टमी ।

वामदेवऋषिः । त्रिष्टुप्छन्दः । द्यावापृथिवी देवते ।

१ २　　　　　　३ १ २ ३ १र　　२र ३ १
**मन्येवांद्यावापृथिवीसुभोजसौयेअप्रथेथाम**

२　३ १र　२र　　१ २　　३ १ २
**मितमभियोजनम् । द्यावापृथिवीभवतꣳ**

२ १र २र　　३ १ २
**स्योनेतेनोमुञ्चतमꣳहसः ॥३७॥**

हे 'द्यावापृथिवी' द्यावापृथिव्यौ ! 'वां' युवां 'सुभोजसौ' शोभनपालयिताराविति 'मन्ये' अहं जानामि हे द्यावापृथिव्यौ 'अमितम्' अपरिमितं 'योजनं' [ युज्यते पुरुषोऽनेनेति योजनं] धनादि तत् 'अभ्यप्रथेथाम्' अभिविस्तारयतम् हे 'द्यावापृथिवी' द्यावापृथिव्यौ ! युवां अस्माकं 'स्योने' सुरूपे स्वसुखकार्य्ये 'भवतम्' 'ते' द्यावापृथिव्यौ 'नः' अस्मान् 'अंहसः' पापात् 'मुञ्चतं' मोचययतम् ॥ ३७ ॥

अथ नवमी।

अनुष्टुप्छन्दः। इन्द्रो देवता। वामदेव ऋषिः।

१ २   २ १ २ ३ १ २ ३ २ ३ १ २
हरीतइन्द्रश्मश्रूण्युतोतेहरितौहरी।
१ २   ३ १ २ ३ १ २ ३ १ २
तंत्वास्तुवन्तिकवयःपरुषासोवनर्गवः ॥३८॥

हे 'इन्द्र'! 'ते' तव 'श्मश्रूणि' 'हरी' सोम-पानेन हरित-वर्णानि' [तथाच श्रूयते—'इन्द्रः श्मश्रूणि हरितानि प्रष्णुत' इति। "शेश्छन्दसि बहुलम्" इति हरि-शब्दात्परस्य शेर्लुक्] 'उतो' अपिच। 'ते' 'हरी' अश्वौ 'हरितौ' हरिद्वर्णौ। 'कवयः' मेधाविनः 'पुरुषासः' पुरुषाः 'वनर्गवः' वननीयाः सम्भजनीयाः सेवनीया गावो येषां ते वनर्गवः [मध्यरेफश्छान्दसः। गोस्त्रियोरिति ह्रस्वत्वं] तादृशः कवयः 'तं' 'त्वा' त्वां स्तुवन्ति ॥ ३८ ॥

अथ दशमी।

वामदेव ऋषिः। अनुष्टुप्छन्दः। आशासने विनियोज्या।

२उ ३ १ २   ३ १ ३ २ ३ १ ३ २   ३ २ ३
यद्वर्चोहिरण्यस्ययद्वावर्चोगवामुत। सत्यस्य
१ २ ३ २ ३ १ २ ३ १ २
ब्रह्मणोवर्चस्तेनमासꣳसृजामसि ॥३९॥

'हिरण्यस्य' हित-रमणीयस्य एतन्नामकस्य 'यद्वर्चः' तेजोऽस्ति। 'यद्वा' अपिच। 'गवाम्' एतन्नामकानां 'यद्वर्चः' तेजोऽस्ति। 'उत' अपिच। 'सत्यस्य' सर्वैः सम्मतस्य 'ब्रह्मणः' यद्वर्चोऽस्ति तेन तैः 'मा' 'संसृजामसि' सम्पादयामः। धनवन्तः पशुमन्तः श्रोत्रिया भवेमेति तात्पर्य्यार्थः ॥ ३९ ॥

अथ एकादशी।

३ १ २ २ २ ३ २क २र १ २
सहस्तंनइन्द्रदध्योजईशेह्यस्यमहतोविरप्-
३ २ ३ ११ २र ३ १ २ ३ २ ३ १
शिन्। क्रतुन्ननृम्णंस्थविरंचवाजंवृत्रेषुश
२ ३ १ २
त्रून्सुहनाकृधि नः ॥४०॥

हे 'विरप्शिन्'! विशेषेण रपणं सत्य-वचनं तदस्यास्तीति विरप्शी, तस्य सम्बोधनं हे विरप्शिन्! विशेषेण स्तोत्रविषये सत्यवाक्य! 'इन्द्र'! 'ते' तव 'सहः' शत्रूणामभिभवनरूपम् 'ओजः' बलं 'नः' अस्मभ्यं 'दधि' ( ददातेश्छान्दसं रूपं लोडि हेर्धिभावादिना ) यस्मात् त्वं तस्य 'अस्य' 'महतः' बलस्य 'ईशे' ईश्वरो भवसि। अतो हे इन्द्र! 'नः' अस्माकं 'क्रतुं न' यज्ञमिव 'नृम्णं' धनं 'स्थविरम्' अतिशयेन प्रवृद्धं "वाजं" बलं च 'कृधि' कुरु। किञ्च नोऽस्माकं 'शत्रून्' 'वृत्रेषु' आवरकेषु उपायेषु 'कृधि' कुरु॥ ४०॥

अथ द्वादशी।

३ १ २ ३ १ २ ३ २ ३ १ २ ३ २ ३ २
सहर्षभाः सहवत्साउदेतविश्वारूपाणिबिभ्र
३ २ ३ २ ३ १ २ ३ २ ३ १र
तीर्द्व्यूध्नीः। उरुःपृथुरयंवोअस्तुलोकइमा
२र ३ २ ३ १ २
आपः सुप्रपाणाइहस्त ॥४१॥

हे 'सहर्षभाः'! वृषभैः सहिताः! 'सहवत्साः'! वत्सैः

सहिताः ! गावः ! 'दूघ्नीः' सायं प्रातः काले द्विविधान्यूधांसि यासां ता द्रघ्नीः द्रघ्नः। 'विश्वा' सर्वाणि नानारूपाणि बिभ्रतीः' बिभ्रत्यः यूयम् 'उदेत' उद्गच्छत समृद्धाः सत्यः आगच्छत। किञ्च। 'उरुः' बहुः 'पृथुः' विस्तीर्णः (उरुः पृथुरिति शब्दाभ्याम् आयाम-विस्तारौ उच्येते। 'अयं लोकः' 'वः' युष्माकम् 'अस्तु' भवतु। 'इमा आपः' 'इह' लोके भूतले अस्मिन् स्थाने 'सुप्रपाणाः' सुखेन प्रकर्षेण पातुं योग्याः सन्तु तस्मादिह बद्धीभूताः 'स्त' भवत उपविशतेति पूर्वेण सम्बन्धः ॥ ४१ ॥

## इति चतुर्थः खण्डः।

---

## अथ पञ्चमे खण्डे—

अथ प्रथमा।

चतुर्दशाग्न आयूंषीत्याद्यास्तत्र जगत्यसौ।
विभ्राट्त्रिष्टुप्चित्रमिति गायत्री द्वादशेतराः।
आद्याग्नेः पवमानस्य स्तुतिः सौर्यस्त्रयोदश।
ऋषीणां विप्रकीर्णत्वात्तत्र तत्राभिदध्महे।
शतं वैखानसा एवं दृष्टवन्तो महर्षयः।

२ ३ १ २ ३ २ ३ २ १ २
अग्नआयूंꣳषिपवसआसुवोर्जमिषंचनः।
२ १ २ ३ १ २
आरेबाधस्वदुच्छुनाम् ॥४२॥

हे 'अग्ने'! पवमान-रूप! अस्माकमायूंषि अन्नान्येतन्नामकानि वा 'पवसे' चरसि 'नः' अस्माकम् 'ऊर्जम्' अन्नरसम्

'इषम्' अन्नं च 'आसुव' आभिमुख्येन प्रेरय। किञ्च। 'दुच्छूनां' (रक्षोनामैतत्) रक्षांसि 'आरे' अस्मत्तो दूर एव 'बाधस्व' सम्पीड़य॥ ४२॥

अथ द्वितीया।

वभ्राण्नामक एता तु सूर्य्यपुत्री ददर्श सः।

२ २ ३ १ २ ३ २उ ३ १ २ ३ १ २ ३

विभ्राड्बृहत्पिबतुसोम्यंमध्वायुर्दधद्यज्ञपता

१ २ १ २ २र ३ १ २ ३ १ २ ३ १ २ ३ १

वविह्रुतम्।वातजूतोयोअभिरक्षतित्मनाप्रजाः

२ ३ १र २र

पिपर्त्तिबहुधाविराजति ॥४३॥

'विभ्राट्' विभ्राजमानः विशेषेण दीप्यमानः सूर्यः 'बृहत्' परिवृढ़ं 'सोम्यं' सोममयं 'मधु' पिबतु। किं कुर्वन्? 'यज्ञपतौ' यजमाने 'अविह्रुतम्' अकुटिलम् अकण्टकम् आयुर्दधत् अन्नं वा कुर्वन्। 'यः' सूर्य्यः 'वातजूतः' वातेन वायुना प्रेर्य्यमाणः सन् 'त्मना' आत्मना स्वयमेव अभिरक्षति सर्वं जगदभिमृशन् पालयति (राशि-चक्रस्य वायुप्रेर्य्यत्वात् सूर्यस्यापि तत्प्रेर्य्यत्वम्) स सूर्यः 'प्रजाः' पिपर्त्ति' (१०) वृष्ट्यादि प्रदानेन पूरयति पालयति वा 'बहुधा' 'विराजति' विशेषेण दीप्यते च ॥ ४३ ॥

अथ तृतीया।

कुत्साः।

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २

चित्रंदेवानामुदगादनीकंचक्षुर्मित्रस्यवरुण-

(१०) 'पिपर्ति"-"पुपोष"-इति, "बहुधा" "पुरुधा" इति च पाठौ ॥

२ २ २ १ २ ३२ ३ १२३ १
स्याग्नेः । आप्राद्यावापृथिवीअन्तरिक्षꣳसू-
२ ३ १र २र ३ १ २
र्यआत्माजगतस्तस्थुषश्च ॥४४॥

'देवानां' दीव्यतीति देवा रश्मयः, तेषां देवानामिव वा प्रसिद्धानाम् 'अनीकं' तेजः-समूह-रूपं 'चित्रम्' आश्चर्य्य-करं सूर्यमण्डलम् 'उदगात्' 'उदयाचलं प्रयासीत्। कीदृशं? 'मित्रस्य वरुणस्याग्नेश्च' (चक्षुरुपलक्षणमेतत्) एतदुपलक्षितानां जगतां 'चक्षुः' प्रकाशकं चक्षुरिन्द्रियस्थानीयं वा। उदयं प्राप्यैव 'द्यावापृथिवी' दिवं च पृथिवीं च अन्तरिक्षं च 'आप्राः' स्वकीयेन तेजसा 'आ' समन्तात् अपूरयत्। ईदृग्भूत-मण्डलान्तरवर्ती सूर्य्यः अन्तर्यामितया सर्वस्य प्रेरकः परमात्मा 'जगतः' जङ्गमस्य 'तस्थुषश्च' स्थावरस्य च 'आत्मा' स्वरूप-भूतः स हि सर्वस्य स्थावर-जङ्गमात्मकस्य कार्य्य-वर्गस्य (कारणाच्च कार्य्यं नातिरिच्यते। तथाच पारमर्षसूत्र—"तदनन्यत्वमारम्भण-शब्दादिभ्यः"-इति। यद्वा। स्थावर-जङ्गमात्मकस्य सर्वप्राणि-जातस्य जीवात्मा। उदिते हि सूर्य्ये मृतप्रायं सर्वं जगत् पुनश्चेतन-युक्तं सत् उपलभ्यते। तथाच श्रूयते—"योऽसौ तमो नुदेति सर्वेषां भूतानाम्। प्राणानादायोदेतीति ॥ ४४ ॥

अथ चतुर्थी।

आयङ्गौः पृश्निरित्यस्य सार्पराज्ञी समैक्षत।
ऋचस्तिस्रो भवेदासां विकल्पेनात्मदेवता ॥

१र २र ३ १२ ३ १२
आयंगौःपृश्निराक्रमीदसदन्मातरं

२ २ २ १२ २ १ २

पुरः। पितरंचप्रयन्त्स्वः॥४५॥

'गौः' गमनशीलः 'पृश्निः' प्राष्टवर्णः व्याप्ततेजाः 'अयं' सूर्य्यः 'आक्रमीत्' आक्रान्तवान् उदयाचलं प्राप्तवानित्यर्थः। आक्रम्य च 'पुरः' पुरस्तात् पूर्वस्यां दिशि 'मातरं' सर्वस्य भूतजातस्य निर्मात्रीं 'भूमिम्' 'असदत्' आसीदति प्राप्नोति (सदेश्छान्दसो लेट्। ऌदित्वात् च्लेरङादेशः) ततः 'पितरं' पालकं द्युलोकं, 'च' शब्दादन्तरिक्षं 'प्रयन्' प्रकर्षेण शीघ्रं गच्छन् 'स्वः' सु अरणः शोभन-गमनो भवति। यद्वा। पितरं स्वर्ग्गलोकं प्रवर्त्तते॥ ४५॥

अथ पञ्चमी।

२ १ २ २उ २ १ २ २ २

अन्तश्चरतिरोचनास्यप्राणादपानती।

२उ २ १र १र

व्यख्यन्महिषोदिवम्॥४६॥

'अस्य' सूर्य्यस्य 'रोचना' रोचमाना दीप्तिरन्तः शरीर-मध्ये मुख्य-प्राणात्मना 'चरति' वर्त्तते। किं कुर्वती ? 'प्राणादपानती' (मुख्य-प्राणस्य प्राणाद्याः पञ्च वृत्तयः। तत्र प्राणनं नाड़ीभिरूर्ध्वं वायोर्निर्गमनं) तथाविधात्प्राणात् प्राणनादनन्तरम् अपानती (अपाननं नाड़ीभिरवाङ्मुखं वायोर्नयनं) तत् कुर्वती (अपपूर्वादनितेर्लटः शतृः, अदादित्वाच्छपो लुक्। उगितश्चेति ङीप्। शतुरनुम इति नद्या उदात्तत्वम्)।

यद्वा। 'अन्तः' द्यावापृथिव्योर्मध्ये "अस्य" सूर्य्यस्य "रोचना" रोचमाना दीप्तिः "चरति" गच्छति (रुच दीप्तौ।

अनुदात्तेतश्च हलादेरिति युच्) किं कुर्वती? "प्राणात्" प्राणनादुदयादनन्तरम् 'अपानती' सायाह्नसमये अस्तङ्गच्छन्ती। (ईदृश्या दीप्त्या युक्तः) अतएव 'महिषः' महान् सूर्य्यः 'दिवम्' अन्तरिक्षं उदयास्तमयोर्मध्ये 'व्यख्यत्' विचष्टे प्रकाशयति (महेरचि महेष्टिप्रजिति औणादिकष्टिषच्-प्रत्ययः। चक्षिङः ख्याञ् छान्दसे लुङि अस्यतिवक्तिख्यातीत्यादिना च्लेरङादेशः ॥४६॥

अथ षष्ठी।

२ २उ ३ १२ १ २ ३१२
त्रिꣳशद्धामविराजतिवाक्पतंगायधी
३ २ ३ २ ३१ २
यते। प्रतिवस्तोरहद्युभिः ॥५७॥

'त्रिंशद्धाम' धामानि स्थानानि (वचनव्यत्ययः) 'वस्तोः' वासरस्य अहोरात्रस्यावयवभूतानि। 'अह' शब्दोऽवधारणे। 'द्युभिः' सूर्य्यस्य दीप्तिभिरेव 'विराजति' विराजते विशेषेण दीप्यते (व्यत्ययेनैकवचनम्। मुहूर्त्तान्यत्र धामान्युच्यन्ते। पञ्चदशरात्रेः पञ्चदशाह्नः) 'पतङ्गाय' पतति गच्छतीति पतङ्गः सूर्य्यः तस्मै सूर्य्याय स्तुति-रूपा 'वाक्' 'प्रतिधीयते' प्रतिमुखं स्तोतृभिर्विधीयते क्रियते [ यद्वा 'वस्तोः' अह्नः 'त्रिंशत् 'धाम' धामानि (घटिकाभिप्रायमेतत्) त्रिंशद्घटिकाः (अत्यन्तसंयोगे द्वितीया) एतावत्कालं 'द्युभिः' दीप्तिभिरसौ सूर्य्यः 'विराजति विशेषेण दीप्यते। तस्मिंश्च समये 'वाक्' त्रयीरूपा तस्मै 'पतङ्गाय' 'प्रतिधीयते' प्रतिमुखं धार्य्यते] तं पूर्वं सेवत इत्यर्थः॥ [श्रूयते हि "ऋग्भिः पूर्वाह्णे दिवि देव ईयते, यजुर्वेदे तिष्ठति मध्ये अह्नः। सामवेदे नास्तमये महीयते वेदैरशून्यस्त्रिभिरेति सूर्य्यः"-इति। यद्वा त्रिंच सूक्त

सापराज्ञ्या आत्मस्तुतिस्तदा सूर्य्यात्मना स्तूयत इत्यवगन्तव्यम् ॥ ४७ ॥

अथ सप्तमी।

१ २ २ १ २ २ १ २ २ १ २
अपत्येतायवोयथानक्षत्राय्यन्त्यक्तुभिः।
१ २ २ १ २
सूरायविश्वचक्षसे ॥४८॥

'त्ये' 'तायवः' 'यथा' प्रसिद्धास्तस्करा इव 'नक्षत्राणि' देवगेहरूपाणि ("देवगृहा वै नक्षत्राणि" इति श्रुत्यन्तरात्) यद्वा, इह लोके मानुषा ये स्वर्गमाप्नुवन्ति ते नक्षत्ररूपेण दृश्यन्ते। तथाच—श्रूयते—'यो वा इह यजते अमुं स लोकं नक्षते तन्नक्षत्राणां नक्षत्रत्वम्' इति। यद्वा, तेषां सुकृतिनां ज्योतींषि नक्षत्राण्युच्यन्ते। 'सुकृतां वा एतानि ज्योतींषि यन्नक्षत्राणि' इत्याम्नायात्। यास्कस्त्वाह—'नक्षत्राणि नक्षतेर्गतिकर्मणो नेमानि न क्षत्राणीति च ब्राह्मणम्' इति) यथाविधानि नक्षत्राणि 'अक्तुभिः' रात्रिभिः सह 'अपयन्ति' अपगच्छन्ति। 'विश्वचक्षसे' विश्वस्य सर्वस्य प्रकाशकस्य 'सूराय' सूर्य्यस्य आगमनं दृष्ट्वेति शेषः (तस्करा नक्षत्राणि च रात्रिभिः सह सूर्य्य आगमिष्यतीत्याकुलायन्तीइत्यर्थः। तायुरिति स्तेननाम। तायुस्तस्कर इति तन्नामसु पाठात्। अक्तुरिति रात्रिनाम। शर्वरी अक्तुरिति तन्नामसु पाठात् ॥ ४८ ॥

अथाष्टमी

१ २ २ २ ३ २ १ २ ३ २ २
अदृश्रन्न(१)स्यकेतवोविरश्मयोजनाँ

(१)"अदृश्रन्"—"अदृश्रम्" इति पाठो ॥

१ २　१ २　२ १ २
अनु । भ्राजन्तोअग्नयोयथा ॥४६॥

'अस्य' सूर्य्यस्य 'केतवः' प्रज्ञापका 'रश्मयोः' दीप्तयः 'जनान् अनुव्यदृश्रन्' जनान् सर्व्वान् अनुक्रमेण प्रेचन्ते । सर्वं जगत् प्रकाशयन्तीत्यर्थः । तत्र दृष्टान्तः—'भ्राजन्तः' दीप्यमानाः 'अग्नय इव' ॥ ४८ ॥

अथ नवमी ।

२ १ २ २ १ २　२ १ २
तरणिर्विश्वदर्शतोज्योतिष्कृदसि
२ १ २　३ २
सूर्य्य । विश्वमाभासिरोचनम् ॥५०॥

हे 'सूर्य्य !' त्वं 'तरणिः' प्रगन्ता अन्येन गन्तुमशक्यस्य महतोऽध्वनो गन्तासि (तथाच स्मर्य्यते—"योजनानां सहस्रे द्वे द्वे शते द्वे च योजने। एकेन निमिषार्द्धेन क्रममाणं नमोऽस्तु ते॥" इति। यद्वा, उपासकानां रोगात्तारयितासि। "आरोग्यं भास्करादिच्छेत्" इति स्मरणात्) तथा 'विश्वदर्शतः' विश्वैः सर्व्वैः प्राणिभिर्दर्शनीयः (आदित्य-दर्शनस्य चण्डालादि-दर्शन-जनित-पाप-निबर्हण-हेतुत्वात्। तथाचापस्तम्बः—'दर्शने ज्योतिषां दर्शनम्' इति। यद्वा, 'विश्वं' सर्वं भूतजातं 'दर्शतं' द्रष्टव्यं प्रकाश्यं येन स तथोक्तः) तथा 'ज्योतिष्कृत्' ज्योतिषः प्रकाशस्य कर्त्ता। सर्वस्य वस्तुनः प्रकाशयितेत्यर्थः (यद्वा, चन्द्रादीनाम्। रात्रौ हि अस्तमये चन्द्रादिषु सूर्य्य-किरणाः प्रतिफलिताः अतोऽन्धकारं निवारयन्ति। यथा द्वारस्य दर्पणोपरि निपतिताः सूर्य्यरश्मयो गृहान्तर्वर्त्ति तमो निवारयन्ति तद्वदित्यर्थः) यस्मादेवं तस्मात् 'विश्वं' प्राप्तं 'रोचनं' रोचमानम् अन्तरिक्षम् 'आ' समन्तात् 'भासि' प्रकाशयसि ॥

यद्वा, हे "सूर्य्य !" अन्तर्यामितया सर्वस्य प्रेरक परमात्मन् ! "तरणिः" संसाराब्धेस्तारकोऽसि । यस्मात् त्वं 'विश्व दर्शतः विश्वैः सर्वैर्मुमुक्षुभिर्दर्शतो द्रष्टव्यः साक्षात्कर्तव्य इत्यर्थः [अधिष्ठान-साक्षात्कारे हि आरोपितं निवर्त्तते] ज्योतिषः सूर्य्यादेः कर्त्ता [नचाम्नायते—"चन्द्रमा मनसो जातश्चक्षोः सूर्य्यो अजायत"इति] ईदृशस्त्वं चिद्रूपतया 'विश्वं' सर्वं दृश्यजातं 'रोचमानं' दीप्यमानं यथा भवति तथा 'आभासि' प्रकाशयसि (मैवं न्यक्करणे हि सर्वं जगत् दृश्यते । तथाचाम्नायते—"तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इति ॥ ५० ॥

अथ दशमी ।

३ २ ३ २१ १ २ ३ १२ २२ ३ १
**प्रत्यङ्देवानांविशः प्रत्यङ्ङुदेषिमा**
२ १ २ क २२ ३ २
**नुषान् । प्रत्यङ्विश्वꣳस्वर्दृशे ॥५१॥**

हे सूर्य्य ! त्वं 'देवानां' 'विशः' मरुन्नामकान् देवान् ['मरुतो वै देवानां विशः" इति श्रुत्यन्तरात् । तान्मरुत्संज्ञकान् देवान् 'प्रत्यङ् उदेषि' प्रतिगच्छन्नुदयं प्राप्नोषि । तेषामभिमुखं यथा भवति तथेत्यर्थः । तथा 'मानुषान्' मनुष्यान् प्रत्यङ् उदेषि । तेऽपि यथास्मःऽभिमुख एव सूर्य्य उदेतीति मन्यन्ते तथा । 'विश्वं' प्राप्तं 'स्वः' द्यां लोकं 'दृशे' 'द्रष्टुं' 'प्रत्यङ्' उदेषि । यथा स्वर्लोक-वासिनो जनाः स्वस्याभिमुखेन पश्यन्ति तथा उदेषीत्यर्थः [एतदुक्तं भवति—ये लोकाः पश्यन्ति ते जनाः सर्वेऽपि स्वस्वाभिमुख्येन सूर्य्यं पश्यन्तीति । तथाचाम्नायते—'तस्मात् सर्व एव मन्यन्ते मां प्रत्युदगात्' इति ॥५१॥

अथ एकादशी।

१ २ ३ १ २ ३ २ ३ १ २

येनापावकचक्षसाभुरण्यंतंजनाꣳ

१ २ १ २ ३ १ २

अनु। त्वंवरुणपश्यसि ॥५२॥

हे 'पावक!' सर्वस्य शोधक! 'वरुण!' अनिष्ट-वारक सूर्य्य! त्वं 'जनान्' प्राणिनः 'भुरण्यन्तं' धारयन्तं पोषयन्तं वा इमं लोकं येन 'चक्षसा' प्रकाशेन अनुपश्यसि अनुक्रमेण प्रकाशयसि तं प्रकाशं स्तुम इति शेषः। [यद्वा। उत्तरस्यामृचि सम्बन्धः, तेन चक्षसा उदेतीति। तथा च यास्केनोक्तं—'तत्ते वयं स्तुम इति वाक्यशेषोऽपि वोत्तरस्यामन्वयस्तेन व्याख्यातीति' ॥ ५२ ॥

अथ द्वादशी।

१र २र ३ १ २ ३ २ ३ १ २ ३

उद्या(२)मेषिरजः पृथ्वहामिमानोअ

१ २ ३ २ १ २

क्तुभिः। पश्यंजन्मानिसूर्य्य ॥५३॥

हे 'सूर्य्य!' त्वं 'पृथु' सुविस्तीर्णं 'रजः' लोकं [लोका रजांस्युच्यन्ते"-इति यास्क वचनात्] द्युलोकं 'द्याम्' अन्तरिक्षलोकम् 'उदेषि' उद्गच्छसि। किं कुर्वन्? 'अहानि' 'अक्तुभिः' रात्रिभिः सह 'मिमानः' उन्मानयन् [आदित्यगत्यधीनत्वादहोरात्रविभागस्य] तथा 'जन्मानि' जननवन्ति भूतजातानि 'पश्यन्' प्रकाशयन् ॥ ५३ ॥

---

(२) "उद्याम्"—"विद्याम्" इति पाठौ ॥

अथ त्रयोदशी।

१ २ ३ २ ३ १ २ ३ १ ३ २ ३ १ क २८

अयुक्त सप्त शुन्ध्युवः सूरो रथस्य नप्त्र्यः

१ २ ३ १ २

ताभिर्याति स्वयुक्तिभिः ॥५४॥

'सूरः' सर्वस्य प्रेरकः सूर्य्यः, 'शुन्ध्युवः' शोधिका अश्वस्त्रियः। तादृशीः सप्त सप्त संख्याकाः 'अयुक्त' स्व-रथे योजितवान्। कीदृशीः? 'रथस्य' 'नप्त्र्यः' नपातयित्र्यः। याभिर्युक्तो रथो याति न पतति ईदृशीरित्यर्थः। एवंभूताभिस्ताभिरश्वस्त्रीभिः स्वयुक्तिभिः स्वकीय-योजनेन रथे संबद्धाभिर्याति यज्ञगृहं प्रत्यागच्छति। अतस्तस्मै हविर्दातव्यमिति वाक्यशेषः॥ ५४॥

अथ चतुर्दशी।

२ १ २ ३ २ ३ ३ २ १ २

सप्त त्वा हरितो रथे वहन्ति देव सूर्य।

२ १ २

शोचिष्केशं विचक्षण ॥५५॥

हे 'सूर्य!' 'देव!' द्योतमान! 'विचक्षण'! सर्वस्य प्रकाशयितः! 'सप्त' सप्त-सङ्ख्याकाः 'हरितः' अश्वाः रस-हरणशीला रश्मयो वा 'त्वा' त्वां 'वहन्ति' प्राप्नुवन्ति। कीदृशम्? 'रथे' अवस्थितमिति शेषः। तथा 'शोचिष्केशं' शोचींषि तेजांस्येव यस्मिन् केशा इव दृश्यन्ते स तथोक्तस्तमिति॥ ५५॥

इति श्रीमद्भगवत्कुथुमर्षिप्रादुष्कृता
सायणाचार्य्यकृतभाष्यसहिता सामवेदीया
आरण्यसंहिता समाप्ता॥

६२ वेतालपञ्चविंशति: (सरलगद्य) ॥०
६३ पातञ्जलदर्शन (सभाष्य सटीक) २
६४ आत्मतत्त्वविवेक (बौद्धाधिकार) २
६५ मुक्तिकोपनिषत् ⁄
६६ उपमानचिन्तामणि ⁄
६७ काव्यदीपिका अलङ्कार सटीक ॥०
६८ पूर्णप्रज्ञदर्शनम् सभाष्य ॥०
६९ चन्द्रशेखरचम्पूकाव्य ३
७० मदनपालनिघण्टु: (वैद्यक) ॥०
७१ सामवेदस्य आरण्यसंहिता
सायनाचार्य्यकृत भाष्यसहिता १
७२ विद्वशालभञ्जिकानाटिका सटीक १
७३ लिङ्गानुशासन सटीक ।०
७४ कुवलयानन्द अलङ्कार सटीक २
७५ प्रियदर्शिका नाटिका सटीक ॥०
७६ सारस्वतव्याकरणसटीक पूर्वार्द्धम् १
७७ वासवदत्ता गद्यकाव्य सटीक १
७८ पुष्पबाणविलास काव्य सटीक ॥०
७९ महिम्नशतकम्, पदारविन्दशतकम्, स्तुतिशतकम्, मन्दस्मितशतकम्, कटाक्षशतकम् (काव्य) १
८० मनुसंहिता कुल्लूकभट्टकृत टीका-सहित ३
८१ नैषधचरितम् काव्य संपूर्ण सटीक ५
८२ सटीक नैषधकाव्य नवमसर्गपर्य्यन्त २
८३ वीरमित्रोदय (स्मृतिशास्त्र) ५
८४ भावप्रकाश (वैद्यक) ५
८५ प्रबोधचन्द्रोदयनाटक सटीक १
८६ अनर्घराघवनाटकसटीक [मुरारि] २
८७ अनर्घराघवनाटक मूलमात्र १
८८ दैवत तथा षड्विंशब्राह्मणसभाष्य २
८९ मीमांसापरिभाषा ।०
९० अर्थसंग्रह (लौगाक्षिमीमांसा) ।०
९१ रघुवंश काव्य सटीक १॥०
९२ मेघदूत काव्य सटीक ⁄
९३ गद्यकथासरित्सागर सम्पूर्ण ६
९४ सांख्यतत्त्वकौमुदी सटीक २
९५ न्यायदर्शन सभाष्य सवृत्ति २॥०
९६ सटीक वाल्मीकिरामायण
बालकाण्डम् १
९७ साहित्यदर्पण सटीक अलङ्कार १॥०
९८ साहित्यदर्पणम् (मूलमात्र) ॥०
९९ संस्कृत शिक्षामञ्जरी प्रथमभाग: ⁄
१०० संस्कृतशिक्षामञ्जरीद्वितीयभाग: ।०
१०१ संस्कृतशिक्षामञ्जरी तृतीयभाग: ॥०
१०२ चतुर्थभाग: कादम्बरीकथासार: ।०
१०३ अमरकोष ॥०
१०४ वेदान्तदर्शन सभाष्य सटीक १०
१०५ वेदान्तपरिभाषा ॥०
१०६ वेदान्तसार सटीक ॥०
१०७ माधवनिदान सटीक (वैद्यक) १॥०
१०८ कामन्दकी नीतिसार ॥०
१०९ मल्लिकामारुतनाटक सटीक २
११० अत्रि, विष्णु, हारीत, याज्ञवल्क्य, उशना, अङ्गिरा, यम, आपस्तम्ब, संवर्त्त, कात्यायन, बृहस्पति, पराशर, व्यास, शङ्ख, लिखित, दक्ष, गौतम, शातातप, वशिष्ठ प्रणीत संहिता (धर्मशास्त्र) १०
१११ मत्स्यपुराणम् ६
११२ चरकसंहिता (वैद्यक) संपूर्ण ६
११३ रसेन्द्रचिन्तामणितथारसरत्नाकर ६
११४ भगवद्गीता शङ्करभाष्य आनन्दगिरिकृतटीका तथा सुबोधिनीसमेत ४